* श्रीजानकी बल्लभोविजयतेतराम *

[illegible]द्गुरवेभगवते भाष्यकाराय श्रीरामानन्दायनमः ।

स्कन्ध पुराणोक्ता,

# श्रीराम-गीता ।

श्रीमद्योगानन्दाचार्य वंशोद्भवेन विदुषा
श्रीरामवल्लभाशरणेन संशोधिता ।



[illegible]हर्षिकल्पस्य जगन्नाथपुरस्थ पापरिया मठा-
धीशस्य पूज्यपादस्य श्री[illegible]न्नाथदासस्य
[illegible] श्रीगदाधरदासेन अयोध्यास्थ
गोकुल प्रेसे मुद्रापयित्वा
प्रकाशिता च ।

सं० १९८६ आषाढ शुक्ल द्वितीया ।

# ❀ भूमिका ❀

सर्व सज्जनों को विदित हो कि यह अपूर्व स्तोत्र रत्न स्कन्द-पुराणान्तर्गत श्रीमद्राम-गीता नामक है जिसमें रावण बधानन्तर प्राप्त श्रीजानकीजी के उपेक्षा करने पर ब्रह्मादि समस्त देवतों ने श्रीरामजी का सर्वेश्वरत्व अचिन्त्य वैभव विशिष्ट परब्रह्मत्व रूप परमैश्वर्य बोधन कराते हुए स्तुति की है जहाँ तहाँ महात्माओंके टीका टिप्पणी में प्रायः इसीका प्रमाण अधिकतर उपलब्ध है सम्बत् १८२२ का लिखा हुआ यह स्तोत्र मेरे पास जब से प्राप्त भया तब से ही मेरी यह उत्कट इच्छा नितान्त बढ़ती ही गई कि इसका मुद्रण होना परमावश्यक है इसका विशेष कारण यह है कि जगत प्रसिद्ध वैष्णव कुल कमल दिवाकर श्रीजगन्नाथपुरी पापरिया मठ वास्तव्य सिद्ध मधुप सेवित चरणाब्ज डाडिया के जमात के श्रीमहन्त पूज्यपाद श्री १०८ स्वामी जगन्नाथदासजी मेरे गुरुदेवजी को यह स्तोत्र प्रियतर तथा अक्षरशः आदरणीय था अतः उन्हींकी दया ने आज आषाढ़ शुक्ल द्वितीया सं० १९८६ को श्रीअयोध्यास्थ गोकुल प्रेस में मेरे द्वारा मुद्रण करा दिया पुराणों में सर्वज्ञ व्यासजी ने श्रीराम परत्व गुण ऐश्वर्य तथा उनके मंत्रका माहात्म्य किस तरह वर्णन किया है वह इससे लाभ उठावें साथ [illegible] महर्षि श्रीवाल्मीकीय रामायणान्तर्गत श्रीराम गीता भी मुद्रित है जिसे श्रीराम[illegible] भरतजी से १७ श्लोक से उपदेश किया है। सत्रह श्लोक सत्रह अध्याय [illegible]द्गीता के मानो मूल सूत्र भूत ही हैं अर्थात् भगवद्गीता के सत्रह [illegible] के भाष्य ही प्रतीति होते हैं आशा है सज्जन इन्ही सत्रह श्लोकों इसे अपना कर मुझे अनुग्रहीत करेंगे ॥ इति ॥

निवेदकः—

गदाधरदास पुजारी।

श्रीमते रामानन्दाय नमः ।

चैत मासे सिते पक्षे नवम्यां च पुनर्वसौ ।



मध्याह्ने कर्कटे लग्ने जातो रामः स्वयं हरिः ॥

## श्रीमद्राम गीता माहात्म्यम् ।

श्रीरामगीता माहात्म्यम् कृत्स्नं जानाति शंकरः ।
तदर्द्धं गिरजा वेत्ति तदर्द्धं वेद्म्यहं मुने ॥ १ ॥
तस्मै किञ्चित्प्रवक्ष्यामि कृत्स्नं वक्तुं न शक्यते ।
यज्ज्ञात्वा तत्क्षणाल्लोकश्चित्तशुद्धिमवाप्नुयात् ॥ २ ॥
श्रीरामगीता यत्पापं न नाशयति नारद ।
तन्न नश्यति तीर्थादौ लोके क्वापि कदाचन ॥ ३ ॥
तन्न पश्याम्यहं लोके मार्गमाणोऽपि सर्वदा ।

श्रीगीताया प्रसिद्धं च योऽन्यो दद्यात्सुदुर्लभम् ॥ ४ ॥
रामेणोपनिषत्सिन्धुमुन्मथ्योत्पादितां मुदा ।
आश्रितायार्पितां गीतासुधां पीत्वामरो भवेत् ॥ ५ ॥
जमदग्निसुतः पूर्वं कार्त्तवीर्यवधेच्छया ।
धनुर्विद्याश्चाभ्यसितुं महेशस्यांतिकेऽवसत् ॥ ६ ॥
अधीयमानां पार्वत्या रामगीतां प्रयत्नतः ।
श्रुत्वा गृहीत्वाशु पठन्नारायणकलामगात् ॥ ७ ॥
ब्रह्महत्यादिपापानां निष्कृतिं यश्च वाञ्छति ।
श्रीरामगीतामात्रं तु पठित्वा मुच्यते नरः ॥ ८ ॥
दुष्प्रतिग्रहदुर्भोज्यदुरालापादिसंभवम् ।
पापं यत्कीर्त्तनात्सद्यो रामगीता विनाशयेत् ॥ ९ ॥
शालग्रामशिलाग्रे च तुलस्यश्वत्थसन्निधौ ।
यतीनां पुरतस्तद्वद्रामगीतां पठेत्तु यः ॥ १० ॥
स तत्फलमवाप्नोति यद्वाचोऽपि न गोचरम् ।
रामगीतां पठेद्भक्त्या यः श्राद्धे भोजयेद्द्विजान् ॥ ११ ॥
तस्य ते पितरः सर्वे यांति विष्णोः परम् पदम् ।
एकादश्यां निराहारो नियतो द्वादशीदिने ॥ १२ ॥
स्थित्वाऽगस्त्यतरोर्मूले रामगीतां पठेत्तु यः ।
स एव राघवः साक्षात्सर्वदेवैश्च पूज्यते ॥ १३ ॥
विना ज्ञानं विना ध्यानं विना तीर्थावगाहनम् ।
रामगीतां नरोऽधीत्य अनन्त फलमश्नुते ॥ १४ ॥
बहुना किमिहोक्तेन शृणु नारद तत्त्वतः ।

यस्य विज्ञानमात्रेण वांछितार्थफलं लभेत् ॥ १५ ॥

इति श्रीब्रह्मांडपुराणे श्रीराम-गीतामाहात्म्यं समाप्तम् ।

———

श्रीमदादिकाव्ये वाल्मीकीये रामायणेऽयोध्याकांडे पञ्चोत्तरशततमे सर्गे श्रीराम-गीता भरतं प्रति रामेणोक्ता ।

तमेवं दुःखितं प्रेक्ष्य विलपन्तं यशस्विनम् ।
रामः कृतात्मा भरतं समाश्वासयदात्मवान् ॥ १ ॥

श्रीराम उवाच ।

नात्मनः कामकारोस्ति पुरुषोऽयमनीश्वरः ।
इतश्चेतरतश्चैनं कृतान्तः परिकर्षति ॥ २ ॥
सर्वेक्षयांता निचयाः पतनांताः समुच्छ्रयाः ।
संयोगा विप्रयोगांता मरणांतं च जीवितम् ॥ ३ ॥
यथाफलानां पक्वानां नान्यत्र पतनाद्भयम् ।
एवं नरस्य जातस्य नान्यत्र मरणाद्भयम् ॥ ४ ॥
यथागारं दृढस्थूणं जीर्णं भूत्वोपसीदति ।
तथावसीदन्ति नरा जरा मृत्युवशं गताः ॥ ५ ॥
अत्येति रजनी या तु सा न प्रतिनिवर्त्तते ।
यात्येव यमुना पूर्णं समुद्रमुदकाकुलम् ॥ ६ ॥
अहोरात्राणि गच्छंति सर्वेषां प्राणिनामिह ।
आयूंषि क्षपयन्त्याशु ग्रीष्मे जलमिवांशवः ॥ ७ ॥
आत्मानमनुशोच त्वं किमन्यमनुशोचसि ।

आयुस्तु हीयते यस्य स्थितस्याथगतस्य च ॥ ८ ॥
सहैव मृत्युर्व्रजति सह मृत्युर्निषीदति ।
गत्वासु दीर्घमध्वानं सह मृत्युर्निवर्त्तते ॥ ९ ॥
गात्रेषु वलयः प्राप्ताः श्वेताश्चैव शिरोरुहाः ।
जरया पुरुषो जीर्णः किं हि कृत्वा प्रभावयेत् ॥ १० ॥
नन्दन्त्युदित आदित्ये नन्दन्त्यस्तमितेरवौ ।
आत्मनो नावबुध्यंते मनुष्या जीवितक्षयम् ॥ ११ ॥
हृष्यंत्यृतुमुखं दृष्ट्वा नवं नवमिवागतम् ।
ऋतूनां परिवर्तेन प्राणिनां प्राणसंक्षयः ॥ १२ ॥
यथा काष्ठं च काष्ठं च समेयातां महार्णवे ।
समेत्य तु व्यपेयातां कालमासाद्य कंचन ॥ १३ ॥
एवं भार्याश्च पुत्राश्च ज्ञातयश्च वसूनि च ।
समेत्य व्यवधावन्ति ध्रुवो ह्येषां विना भवः ॥१४॥
नात्र कश्चिद्यथा भावं प्राणी समतिवर्त्तते ।
तेन तस्मिन्नसामर्थ्यं प्रेतस्यास्त्यनुशोचतः ॥१५॥
यथाहि सार्थं गच्छन्तं ब्रूयात्कश्चित् पथि स्थितः ।
अहमप्यागमिष्यामि पृष्ठतो भवतामिति ॥ १६ ॥
एवं पूर्वैर्गतो मार्गः पितृपैतामहैर्ध्रुवः ।
तमापन्नः कथं शोचेद्यस्य नास्ति व्यतिक्रमः ॥१७॥

इति श्रीमदादिकाव्ये वाल्मीकीये रामायणे अयोध्याकाण्डे
पञ्चोत्तरशततमे सर्गे श्रीराम-गीता संपूर्णा ।

श्रीसीतारामचन्द्राभ्यांनमः ।

स्कन्दपुराणोक्त

# श्रीमद्रामगीताप्रारम्भः।

श्रीसनक उवाच ।

प्रभुणा तेन रामेण निहते राक्षसेश्वरे ।
स्वस्थेषु त्रिषु लोकेषु धर्मे च स्थितिमागते ॥१॥
सीतायामनवद्यायामानीतायां हविर्भुजः ।
कथं क्रोधाग्निरुदभूद्रामस्यासमये पुनः ॥२॥
कृतकृत्योऽपि भगवान् रामश्चुक्रोध यत्पुनः ।
आरुणेय महानेष संशयो हृदि वर्त्तते ॥ ३ ॥
अहो धन्यतमास्ते वै यैर्दृष्टं रामवैभवम् ।
शृण्वतामपि नोऽद्यापि रोमहर्षोऽभिवर्द्धते ॥४॥

श्रीशुक उवाच ।

अथ तस्मिन् विनिहते रावणे लोकरावणे ।
स्तुवत्सु सिद्धसंघेषु स्वरूपं स्मारयत्स्वपि ॥५॥

दर्शयन्निव सर्वेषां स्वरूपं पारमेश्वरम् ।
विसृज्य मानुषं भावं रामः स्वच्छन्दचेष्टितः ॥६॥
विश्वमेतदशेषेण सदेवासुरमानुषम् ।
आवृत्य स तदा रामो वहिरन्तरवर्द्धितः ॥७॥
यथाऽभवं प्रपंचोहं गोपयित्वा निजैकताम् ।
स्यामेकमेव भूयोद्य अथोत्सृज्य प्रपंचताम् ॥८॥
इत्यखण्डचिदानंदस्वरूपावेशवृंहितः ।
ववृधे परमाकाशो विश्वग्रामस्तदा प्रभुः ॥६॥
दिवं च पृथिवीं चैव निरीक्ष्य च दिशो दश ।
स्वातंत्र्यादुपसंहर्त्तुं भुवनान्युपचक्रमे ॥ १० ॥
बन्धको भवपाशेन भवपाशात्प्रमोचकः ।
कैवल्यदः परब्रह्म विष्णुरेव सनातनः ॥ ११ ॥
रामचन्द्रगुणग्रामं गुणिनो गणयन्ति ये ।
सर्वमंभोनिधेरंभः कुंभेनाकलयन्ति ते ॥ १२ ॥
ततः प्रचुक्षुभे शेषः कालानलसमान्वितः ।
ब्रह्माण्डं प्रोन्नयन्वक्त्रैर्ग्रसिष्णुः सचराचरम् ॥१३॥
चकम्पे मेदिनी सर्वा सपर्वतनदीनदा ।

सद्वीपाः सागराः सप्त संगताश्च परस्परम् ॥१४॥
युगपत्ते पुरादित्या द्वादश स्वकरैर्भृशम् ।
प्रचेरुर्मारुताः सप्त संतप्ता वह्नितेजसा ॥१५॥
ततो देवगणाः सर्वे सिद्धाश्च ऋषयस्तथा ।
पुरन्दरं पुरस्कृत्य ब्रह्माणं शरणं ययुः ॥१६॥
स भीतः सह तैर्गत्वा कैलाशं चन्द्रमौलये ।
न्यवेदयदशेषेण रामस्य च समीहितम् ॥१७॥
भव शंकर देवेश पाहि नो महतो भयात् ।
कस्त्वामृते विभोस्तस्य कोपाग्निं शमयिष्यति ॥१८॥
संवर्त्तोयमकस्मान्नो रामकोपात्प्रधावति ।
का गतिः का दिशा किन्नामास्माकं गिरिजापते ॥१९॥
अथ ब्रह्मवचः श्रुत्वा सह तैर्वृषभध्वजः ।
समागत्य ततः शीघ्रं वैकुण्ठं हरिमन्दिरम् ॥२०॥
दृष्ट्वा तं गरुडारूढं विष्णुलोकाभयप्रदम् ।
प्रणम्य च यथावृत्तं तस्मै सर्वं न्यवेदयत् ॥२१॥
समुपेत्य ततः सर्वे ब्रह्मविष्णुशिवादयः ।
ददृशुस्ते महात्मानं रामं व्याप्ताण्डमण्डलम् ॥२२॥

मायावृतादिविषदस्तमतीतमायं,
मर्त्या मरान्यतममित्यवमत्य याताः ।
दृष्ट्वा च तत्र कवलीकृतविश्वकोशं,
भीत्या निमील्यनयना विनतिं वितेनुः ॥२३॥

श्रीदेवा ऊचुः ।

मर्त्यस्त्रिलोकविजयी किमधोक्षजो वा,
रक्षःकुलक्षयकरः स्वयमेष रामः ।
इत्यस्मदादिपशुभिः परिकल्पितं ते,
रूपं चिदंबर मृषैव विभो प्रतीमः ॥२४॥
मानुष्यनाटकममेयरूपामयं ते,
विष्णवाद्यमर्त्यनटनं च सदावनाके ।
रूपं यदेतदधुना धृतमार्त्तबन्धो,
तस्मै नमोस्तु सुतरामतिविश्वभूम्ने ॥२५॥
जानीमहे तव न नाम न चापि रूपं,
भासैक एव विदधासि निजेन विश्वम् ।
क्व स्मो वयं त्वयि विभो भुवनैश्च साकं,
विद्मो न चैव नभसीव रजो भ्रमामः ॥२६॥

वाचः स्पृशंतु कमिमा बहुधा गृणन्त्य-
स्त्वेतानि वा क्व नु मनांसि लगन्त्वमूर्त्ते ।
तस्मादतर्क्यपरमार्थ सदैव यस्मै,
कस्मै चिदेव महते प्रभवे नमोस्तु ॥२७॥
विधिः कथं त्वं रजसा विहीनः
सत्त्वेन हीनस्तु कथं मुरारिः ।
स्वयं प्रकाशस्तमसः परस्ताद्--
विभ्राजमानः पुरभित्कथं त्वम् ॥ २८ ॥
मर्त्येष्वमर्त्येषु तथेतरेषु,
स्थूलेषु सूक्ष्मेषु चराचरेषु ।
दृश्येष्वदृश्येषु जगत्सु रामो,
भवत्यभून्नो भविता समस्ते ॥ २९ ॥
क्रोधो हि रुद्रस्तव विश्वमूर्त्तेः,
कामः प्रजानां पतिरेष एव ।
माया रमेशः स्वयमेव मोहो,
वयं त्वदाज्ञानुचराः स्थिताःस्म ॥ ३० ॥
मोहस्तवानंदघनस्य कस्माद्,

द्वेषोऽद्वितीयस्य कथं च रागः ॥
क्रीडां तवेमां विनिवारयेत्कः,
स्वयं विनैकाममितानुकंपाम् ॥३१॥
उन्मेषमात्रे तव सृष्टिरेषा,
निमेषमात्रे प्रलयोपि यस्य ॥
तयोश्च साम्यं स्थितिरंडकाना,
कथं नियोक्तुं वयमीश्महे त्वाम् ॥३२॥

श्रीशुक उवाच ।

नत्वोत्थिताः प्रभुममी समुदीक्ष्य भूयो,
भीतास्ततोपि सुतराममराश्च सर्वे ।
विस्मृत्य तत्वमहमित्यखिलं निरीहा--
स्तूष्णीं बभूवुरखिला इव निर्विकाराः ॥३३॥
अथतेऽन्योन्यमभ्येत्य देवा विष्णुपुरोगमाः ।
तत्प्रभावं च दृष्ट्वेत्थंबभूवुः स्तब्धमानसाः ॥३४॥
स्तंभीभूतेषु सर्वेषु शंकरः करुणान्वितः ।
प्रसादयितुमेवैनं तुष्टाव परमेश्वरम् ॥३५॥

श्रीशंकर उवाच ।

सर्वापदुद्धरणमेकमशेष संवि-

न्मूलाकरं च निगमा निगदन्त्यमी यम् ।

सोऽसि त्वमेव सुरनाथ सुखादिभुक्तेः,

मुक्तेश्च राम ! भजतामिह यो निदानम् ॥३६॥

एके तपोभिरपरेक्रतुभिस्तथान्ये-

होमाऽर्चनाऽध्ययनदानयमादियोगैः ।

भक्त्यैकयैव परया कतिचित्सदैव,

त्वामेकमेव परमं बहुधा भजन्ति ॥३७॥

त्वं राम राम रजनीचरदुर्वनाना,

कल्पांतपावकनिजोत्तमनामधेयम् ।

नाथ त्वदंघ्रि सरसीरुहषट्पदानां,

यस्माद्भयं त्वमभयं कुरुनस्ततो द्राक् ॥३८॥

विश्वं वपुर्भवतु वातदतीतमस्माद्,

बृंहिष्ठमन्यदपि वाऽस्तु यतोभयं नः ।

तस्मात्तदेतदुपसंहर विश्वरूपं,

यत्तेजसा वयममी विवशीकृताः स्मः ॥३९॥

क्षेमं यतो हि जगतां श्रुतिभिः सदोक्तं,

त्वत्तो भयं यदि ततस्त्वदुपाश्रितानाम् ।

कुर्म्मः किमत्र करुणामय यत्प्रसादा,

द्भक्ताभवाब्धिमपि गोष्पद मातरन्ति ॥४०॥

राम त्वमेव भगवन्प्रवणावयंते-

त्वद्दैभवैकनिलयाः परमार्थदृष्ट्या ।

व्योम्नः पृथक् कथममी प्रमिताब्जकोशाः,

काशास्ततः परतरात्परमेश्वरस्य ॥४१॥

क्वासीश तत्त्वसरणेरतिदूरगस्त्वं,

तत्त्वाटवीपरिचरा हि वयं क्व च स्मः ।

त्वद्भक्तिमात्रमवलम्ब्य तथापि तुभ्यं-

कस्मैचिदेव महसे नमश्चाविदध्मः ॥४२॥

नमोस्तु ब्रह्मणे तुभ्यं परस्मै विश्वयोनये ।

सच्चिदानन्दरूपाय विश्वरूपाय वेधसे ॥४३॥

नमो निरन्तरानन्दमूलकंदाय विष्णवे ।

जगत्त्रयकृतानन्दमूर्तये शुभमूर्तये ॥४४॥

नमोस्तु निर्गतोपाधिस्वरूपाय मुदात्मने ।

नमो ब्रह्मेशपूज्याय सर्वदेवमयाय च ॥४५॥
उत्पत्तिस्थितिसंहारकारिणे क्लेशहारिणे ।
नमः सहस्त्रशिरसे पुराण पुरुषाय ते ॥४६॥
एकांशीभूतविश्वाय त्रिपादूर्ध्वस्थिताय च ।
विश्वातीताय महसे नमो विश्वमयाय च ॥४७॥
अनंतशक्तये तुभ्यं नित्यतृप्ताय वै नमः ।
अलुप्तशक्तये तुभ्यं स्वतंत्राय नमो नमः ॥४८॥
अचिन्त्याय नमस्तुभ्यं केवलज्ञानमूर्त्तये ।
सन्मात्राय च विद्यायै सीतायै राघवाय च ॥४९॥
नमः प्रपंच रूपिण्यै निष्प्रपंचस्वरूपिणे।
नमोध्यानस्वरूपिण्यै योगिध्येयाऽऽत्मरूपिणे ॥५०
परिणामापरिणामनित्याभ्यां च नमोनमः।
कूटस्थवीजरूपाभ्यां प्रकृत्यै पुरुषाय च ॥५१॥
यद्विवर्त्त इदं विश्वं शब्दार्थकृति जृंभते ।
त्वमेव पराकाशस्त्वच्छक्तिरखिलं जगत् ॥५२॥
इच्छाज्ञानक्रियाश्चैव विद्याऽविद्या पराऽपरा।
सदसद्व्यक्तिरव्यक्तं त्वच्छक्तेरखिलाः कलाः ॥५३॥

प्रवृत्तिश्च प्रतिष्ठा च विद्याशांतिस्तथोत्तमाः ।
शांत्यतीतापरासूक्ष्मा समना चोन्मनेति च ॥५४॥
सीताविलसितं सर्वं नानाकारेण दृश्यते ।
तवानुग्रहशक्त्यैव त्वदेकमपि लभ्यते ॥५५॥
सद्योजातः प्रवृत्तस्त्वमीशिषे क्षेत्ररक्षकः ।
वामदेवः प्रतिष्ठाया वासनातनुमास्थितः ॥५६॥
विद्याया अप्यघोरस्त्वं तेजसां निधिरक्षयः ।
प्राणस्तत्पुरुषः शांतेस्तत्त्वानां यंत्रवाहकः ॥५७॥
ईशानः शांत्यतीताय व्यापको व्योमविग्रहः ।
विष्णुश्च समनायास्त्वमुन्मनायान्निरंजनः ॥५८॥
सेयंभावस्थितिः साक्षाद्भिन्नाभिन्नतयास्थिता ।
सीताशक्तिरचिंत्येयं त्वन्मूर्त्तिरचलापरा ॥५९॥
सीतोन्मना भवान् राम समनेयं भवान् शिवः ।
विद्येयं मातृकाशुद्धा त्वं तु देव सदाशिवः ।
ईश्वरस्त्वमविद्येयं मायेयं त्वं च त्र्यंबकः ॥
सीतारमाभवान् विष्णुः सीतागौरीभवाञ्छिवः ।
सीतास्वयं हि सावित्री भवान्ब्रह्मा चतुर्मुखः ॥६०॥

सीता शची भवान्निन्द्रः सीता स्वाहानलोऽभवान्।
सीता संहारिणी देवी यमरूपधरो भवान् ॥६१॥
सीता तु तामसी देवी निर्ऋतिस्त्वं रघूत्तम।
सीता तु भार्गवीदेवी वरुणस्त्वं जगत्पतिः ॥६२॥
सीतासदागतिर्देवीजगत्प्राणः स्वयं विभो।
सीता हि सर्वसम्पत्तिः कुवेरस्त्वं सदोदितः ॥६३॥
ऐश्वर्य्यं जानकी साक्षादीशानस्त्वं महेश्वरः।
सीता तु रोहिणीदेवी चन्द्रस्त्वं लोकसौख्यदः॥६४॥
सीता संज्ञाभवान् सूर्य्यः सीता रात्री दिनं भवान्।
सीता च दक्षिणा देवी यज्ञमूर्त्तिर्भवान् विभो॥६५॥
सीता भुक्तिर्भगवती भोगस्त्वं पुरुषोत्तमः।
सीतेयं मुक्तिरचला मोक्षस्त्वमकुतोभयः ॥६६॥
सीता शक्तिर्जगद्धात्री शक्तिमांस्त्वं महेश्वरः।
सीता देवी महाकाली महाकालस्त्वमेवहि ॥६७॥
किमत्र वहुनोक्तेन रामत्वं ब्रह्म तत्परम्।
त्वद्विभूतिरियं सीता विश्वाकारा विजृंभते ॥६८॥
स्त्री चिन्हं सर्वलोकेषु यत्तत्सर्वंहि जानकी।

पुंनाम लांछितं वस्तुयत्तत्सर्वं भवान्विभो ॥६९॥
सर्वत्र सर्वदेहेषु सीता षट्चक्रधारिणी ।
तथात्वमपि चक्रांतश्चिन्मूर्त्तिर्विश्वभासकः ॥७०॥
स्त्रीपुंभावादिरहितं त्वमेव परमं पदम् ।
त्वत्तो बिभ्यति देवाश्चमनसा सहवागपि ॥७१॥
सत्यानन्दस्त्वमेवासि यत्र भेदो न विद्यते ।
तवलीला प्रपंचोऽयं तत्वं चाहमितित्रिधाः॥७२॥
सन्मात्रस्याद्वितीयस्य विभोरेकस्य ते प्रभो ।
शक्तित्त्वादिभेदोयं वस्तुतो नैव विद्यते ॥७३॥
स्वस्वातंत्र्यात्सिसृक्षोर्वा शक्त्यादिरुपचर्यते ।
भजतां मुक्तये स्यातां नामरूपे महेश्वर ॥७४॥
निराकारोऽपि साकारो भक्तानामनुकंपया ।
स्वानन्द एव रमसे स्वच्छन्दगतिरीश्वरः ॥७५॥
भिन्नामिवविधायैनां चिच्छक्तिजनकात्मजाम् ।
गोपयस्यात्मनात्मानं तारकं ब्रह्मशब्दितम् ॥७६॥
यतो वाचो निवर्त्तन्ते मनसा सह दूरतः ।
त्वमेव परं ज्योतिस्तमसः परमक्षयम् ॥७७॥

तवांशोहं हरिर्ब्रह्मा सर्वेदेवाश्चराचरम् ।
जगत्पूज्योह्यहं तस्मादुमया सह चानया ॥७८॥
आवांराम जगत्पूज्या वावयोश्च युवांसदा ।
त्वन्नाम जापिनी गौरीत्वन्मंत्रजपवानहम् ॥७६॥
मुमूर्षोर्मणिकर्ण्यं तदर्द्धोदक निवासिनः ।
अहं दिशामिते मंत्रं तारकं ब्रह्म वाचकम् ॥८०॥
श्रीराम राम रामेतिह्येत तारक मुच्यते ।
अतस्त्वंजानकीनाथ परंब्रह्माऽसिनिश्चितम् ॥८१॥
त्वन्मायामोहिताः सर्वे नत्वांजानंतितत्त्वतः ।
त्वद्भक्त्यैवविजानंति ब्रह्मैकंत्वामखण्डतम् ॥८२॥
विश्वरूपस्यतेराम विश्वेशब्दाहि वाचकाः ।
तथापि मूलमंत्रस्ते विश्वेषां वीजमक्षयम् ॥८३॥
तारादिर्मुक्तये राम रमादिरपि भुक्तये ।
वाग्भावादिश्चवाक् सिध्यैर्मायादिरखिलेष्टदः ॥८४
अचिंत्योऽयं महाबाहो मंत्रश्चिंतामणिर्विभो ।
विहायैनं विमूढात्माइतश्चेतश्च धावति ॥८५॥
अग्निषो मौज्ञगद्योनी विंदुनादौक्षराक्षरौ ।

तारकस्तदतीतस्त्वं परमात्मा निरंजनः ॥८६॥
तत्त्वत्रयमिदंगुह्यमेकीकृत्य स्वमूर्द्धनि ।
स्वयंज्योतिः प्रपश्यंतियद्गत्वा न निवर्त्तते ॥८७॥
त्रीणिज्योतींषिनिर्भिद्यमनसा मारुतेन च ।
योगिनस्त्वां प्रपद्यंते स्वराजमचलं विभुम् ॥८८॥
रुद्राग्निरुच्यतेरेफो विष्णुः सोमोऽथ उच्यते ।
तयोर्मध्यगतो ब्रह्मात्वाकारो रविरुच्यते ॥८६॥
ज्योतींषि कवली कृत्यत्रीण्याकाशोविभुःस्वयम् ।
नादोऽभिधत्ते सन्मात्रं त्वामेव परमेश्वरम् ॥६०॥
मुख्यत्वाद्धिश्व बीजत्वात्तारकत्वान्महेश्वर ।
त्वदंशैःस्वीकृतं देवैरस्माभिर्नामतेत्रिभिः ॥६१॥
भार्गवोऽयं पुराभूत्वा स्वीचक्रे नामते विधिः ।
विष्णुर्दाशरथिर्भूत्वा स्वीकरोत्यधुना पुनः ॥६२॥
सकर्षणश्च तच्चाहं स्वीकरिष्यामि शाश्वतम् ।
एकमेवत्रिधोपात्तं सृष्टि स्थित्यंत हेतवे ॥६३॥
भ्रातरस्तेत्रयो राम ब्रह्मा विष्णुरहं तथा ।
त्वत्तोविनिर्गता भूयो वयंलीये महिस्वयि ॥६४॥

त्वमेव परमं गुह्यं त्वमेव परमं पदम् ।
त्वमेव परमं ब्रह्मत्वमेव शरणं हितः ॥९५॥
तत्त्वमसीति वेदान्त महावाक्योपपादितम् ।
निर्वक्तिमंत्रतत्त्वार्थं मिति राम नमोस्तु ते ॥९६॥
सीतानवद्या विद्येयंत्वन्मया त्वत्परायणाः ।
पश्यैनामात्मनः शक्तिमप्राप्यामात्महिंसकैः ॥९७॥
विश्वमेतन्महाबाहो लीलावसथ एवते ।
दशेंद्रियैर्यतो विश्वंव्याप्तोसि च धियासह ॥९८॥
पिता दशरथः सोयं दीप्यमानः स्वतेजसा ।
पश्यैनमिंद्रानुमतंत्वां दिदृक्षुमिहागतम् ॥९९॥
त्वदंशानमरानेतान्पितॄंश्च मुनि पुंगवान् ।
अनुग्रहाण ते भक्तान्नः सुरेश्वर संश्रितान् ॥१००॥
त्वंहिनः परमश्चक्षुः प्रेरकः सर्व शक्तिधृक् ।
त्वामाश्रित्य वयं सर्वेसर्वकार्य विधायिनः ॥१०१॥
त्वं विश्वजन्म स्थिति संयमार्थे,
गृहीत शक्तित्रयईश शश्वत् ।
करोषि कर्म्माण्यतिदुष्कराणि भक्त्योप,

पन्नेषु सुखावहानि ॥१०२॥

भक्तास्तवांघ्रि शरणाः किलईश लोके,

विज्ञाय निर्मलधिया तव रूपमैशम् ।

सर्वैस्त्वदर्पित मनो बचने हितार्थं,

प्राणाव्रजन्ति पदमक्षय मेकभावा ॥१०३॥

येत्वांभवाप्यय विमोक्षणलब्धदिक्ष,

मर्चन्ति चान्य सुखहेतव आत्ममूलम् ।

नूनं विमुष्टमतय स्तवमाययाते,

दैवेनशश्वदतिभग्नभगा भ्रमन्ति ॥१०४॥

नमस्तेचित् सुखायैक भक्त्याग्राह्य स्वरूपिणे,

परमानन्द रूपायनिर्गुणायगुणात्मने ॥१०५॥

नमः समस्त तत्त्वायतत्वा धारायते नमः,

गुणच्छन्न महिम्नेते सर्वदाऽदिविषाद्विषे ॥१०६

नमो भगवते मंत्र तत्वलिङ्गाय शार्ङ्गिणे,

नमः सर्व प्रवोधायगरिम्णेचित् सुखात्मने ॥१०७॥

त्वन्नः शक्तिधरः सर्वकार्य संवित प्रदायकः,

त्वामुपास्यसदाभक्त्या भवामोलोकपूजिताः॥१०८

इतिस्तुति परात्मानं रामं चैतन्य विग्रहम् ।
ब्रह्म विष्णु महेशाद्या बरयामासुरीश्वरम् ॥१०९॥
स्यान्नस्त्वेषातु भगवन्भक्तिरव्यभिचारिणी ।
त्वय्येवाबिरतांभक्तिं देहिनातोवरान्तरम् ॥११०॥
श्रीशुक उवाच ।
एवमखिलतितं चोक्त्वा प्रसन्नः करुणान्वितः ।
पूजयित्वायथा न्यायं बचनं चेदमब्रवीत् ॥१११॥
श्रीराम उवाच ।
यः स्तौति परया भक्त्यास्तोत्रेणानेन मानवः ।
स यातिपरमं स्थानं यत्रगत्वा न शोचति ॥११२॥
रहस्यमन्यद्वक्ष्यामि भक्तानामनुकंपया ।
यस्यस्मरणमात्रेण शत्रूणां संक्षयो भवेत् ॥११३॥
ॐ फट् राँ ॐ राम राम मम मन्त्रं घोरं द्राक् ।
हनहनयोस्मान् द्वेष्टियं चवयं द्विष्मः ॥
यो सौ कालाग्निरुद्रोभून्मसः शत्रु विनाशनः ।
मदंशः सत्वमेवाऽजावमोघास्त्रं भविष्यति ॥११४॥
यत्प्रभावात्भयंनैव शत्रुभ्यः पार्वती पते ।

जप्तं हुतं सदा ध्यातं मृत्योरपिविनाशकम् ॥११५॥
अस्त्रं तु कवचादूर्द्ध्वं तारं च प्रणवात्पुरा।
महा मंत्रेण युग्मात्तु जीवाक्षर युगंवदेत् ॥११६॥
घोरोपलक्षितं शत्रुं तच्छब्देन विनिर्दिशेत।
द्राक् पादादुपरिष्टात्तु हनद्वंद्वं समुच्चरेत् ॥११७॥
योऽस्मान्द्वेष्टियं च वयं द्विष्म इत्येतदुच्चरेत्।
एतन्मदस्त्रंशत्रूणांमूर्द्धि वज्रं पतिष्यति ॥११८॥
कालबज्र मिति ख्यातं तवस्नेहात्प्रकाशितम्।
येन शत्रुभयान्मुक्तोमद्भक्तः सुखमेधते ॥११९॥
श्रीशुक उवाच।
आथर्वणमिदं चास्त्रं नर नारायणा वृषी।
प्रायच्छेतां वशिष्ठाय सुरथंतर चर्मिणे ॥१२०॥
लक्षत्रयमिदं जप्त्वा जुहुयात्तद्दशांशतः।
खादिरैराज्यसंयुक्तैस्ततः सिद्धिमवाप्नुयात् ॥१२१॥
श्रीशुक उवाच।
इति शिवमुखपद्मादुद्धृतैः स्तोत्र मंत्रैः-
प्रतिदिनमिह भक्त्यारामभाराध्यमर्त्यः।

यतिभिरपि दुरापं प्राप्यधामाद्वितीयं,
निरवधि भव दुःखान्मुच्यते शीघ्रमेव ॥१२२॥
हे जानकि महामाये श्रीराम त्रिपुरान्तक ।
संसाराब्धाव पारे मां पतितं कि मुपेक्षसे ॥१२३॥

इति श्रीनिर्वाण खण्डस्य द्वात्रिंशत्तमोध्यायःऽस्कंद महापुराणोपनिषद्
श्रीमद्रामगीता प्रथमोऽध्यायः ॥१॥

---

श्रीशुक उवाच ।

उपांतोदितरौद्रांशं वैष्णवानां व्यवस्थितम् ।
तदैवांशमुपादित्सुं ब्राह्मणं च निजेच्छया ॥१॥
अनंत तत्वाभरणमनंताऽऽदित्यवर्चसम् ।
अनंत करपन्नेत्रंशिरा वक्र क्रियान्वितम् ॥२॥
निराकारं च साकारं प्रभा मण्डल मण्डितम् ।
विश्वैक साक्षिणं विश्वं विश्वातीतं निरंजनम् ॥३॥
क्वचित्प्रसन्नमेवात्र शांतमन्यत्र भैरवम् ।
नाना शक्ति समाकीर्णमधृष्यानेक विग्रहम् ॥४॥
इत्थमीश्वर भावेन क्रीडंतं परमेश्वरम् ।
प्रतिलोमविलग्नैश्च ब्रह्माण्डैरभिमंडितम् ॥५॥

बहु रूपमरूपं च दृष्ट्वारामं हरिस्तदा ।
तुष्टा व प्रणतो भूत्वा भूयो भूयः कृतांजलिः ॥६॥

श्रीविष्णु उवाच ।

नमो रामायविभवे तुभ्यं विश्वैक साक्षिणे ।
नमो विश्वैक देहाय नमो विश्वात्तिगायते ॥७॥
नमो नित्याय शुद्धाय प्रभवे काल मूर्त्तये ।
दशदिग्वाहवे तुभ्यं नमो भू चरणाय च ॥८॥
नमौ भोरेतसेशश्चत्तेजो नेत्राय ते नमः ।
वायु चेष्टाय महते व्योम देहायतेनमः ॥६॥
अहं ते हृदयं राम तवनाभि पितामहः ।
कंठस्ते नीलकंठोऽसौ भ्रूमध्यं च दिवेश्वरः ॥१०॥
सदा शिवोल्ललाटस्ते तत ऊर्द्धं परः शिवः ।
भूषणानि च तत्वानि विश्वाकारस्यते प्रभो ॥११॥
भूरादि सप्त लोकाश्च नृत्यतो रंग भूमयः ।
सप्त पाताल गर्त्तश्च पार्ष्णिवाताः स्थिताहिते ॥१२॥
अनंताः शक्तयो राम प्रदृश्यंते तव प्रभो ।
बहूंश्चादृष्ट पूर्वांश्च पश्याम्यद्यापितामहान् ॥१३॥

विष्णूनसंख्यान् पश्यामि त्वयि रुद्राननेकशः ।
वहुरूपान्बहुभुजान्बहुवर्णान्महोदयान् ॥१४॥
वर्त्तमानानतीतांश्च सुरानिहभविष्यतः ।
नाऽहमंतं प्रपश्यामि विभूतीनांतव प्रभो ॥१५॥
देव दानव गंधर्वायक्ष राक्षस किन्नराः ।
विद्याधराश्च ऋषयः सिद्धाश्च सहचारणैः ॥१६॥
नराश्चपितरश्चैव पशवश्च सरीसृपाः ।
त्वदेक रोम कूपेतु लीयन्ते स्थावरैः सह ॥१७॥
सेयं माया गुणमयी प्रपंचोऽयं यदात्मकः ।
तवेच्छातः समुत्पन्नायया विश्वंविमोह्यते ॥१८॥
तवांशवोमीचिद्वानोः क्षेत्रज्ञास्त्वऽस्मदादयः ।
भिन्ना इव प्रदृश्यंते त्वन्मायापरमार्थतः ॥१९॥
यत्र ग्रहा सनक्षत्राः सिद्धाश्च ऋषयस्तथा ।
येन व्याप्तं च सकलं तत्तेनाभिर्विभोनभः ॥२०॥
त्वामाहुरानंदमखंडमेकं-
निरस्तमायोपाधिमात्त वाचः ।
यस्मिन्सपक्षो नचवाविपक्षो-

नचाध्वषट्कं न मलत्रयं च ॥२१॥

षड्डुर्म्मयोवान च नाम रूपां,

न कारणं त्वं च न कार्यतापि ।

नान्तो न चादिर्न च मध्यमीषदाल्लं,

वनं नैव च शून्य भावः ॥२२॥

येतोऽतिदूरे निवसंति वाचो,

मानान्यनेकानिहृदा सहैव ।

येनैव विश्वं महसा स्वभासा,

पूर्णं सुसूक्ष्मेण निरंतरेण ॥२३॥

यस्यांश भूताश्च वयं तथान्ये,

सुराः समस्ताः पितरश्च सर्वे ।

किंवा वहूक्तेन जगत्समस्तं,

विभो विभूतिः परमारिरंसोः ॥२४॥

परात्परायाहृत विश्व भूम्नेतस्मै-

स्वधाम्नेहि नमो वितन्मः ।

यज्ञानशेषान्जुहुमश्चयस्मै-

स्वधांविदध्मः प्रपितामहाय ॥२५॥

त्रयी समस्ता च वषट्कृतिः सा,
स्वाहा जगद्विश्चभुजे च यस्मै ।
उद्गीथ एवायमलं यदाप्तै,
बेंदादि वीजं विजिता निखानाम् ॥२६॥
नित्याय नित्य प्रभवे प्रभूणां,
सदावधूताखिल विक्रियाय ।
द्रुह्यन्त्यविद्योपहताश्च यस्मै,
मर्त्यादि भावं परिकल्प्यमूढाः ॥२७॥
देवाश्चसिद्धा ऋषयश्च सर्वे,
वेदांत तत्त्वार्थ विदो यतीन्द्राः ।
भक्त्यैव राम स्पृहयंतियस्मै,
स्त्वमेव तद्ब्रह्म यद द्वितीयम् ॥२८॥
यदैकमात्मानमनेकधैव,
विभज्यविश्वां व्यतनोरमूर्त्ते ।
तदेवभानोरिव रश्मयोमी,
स्त्वत्तोवयं रामविनिः सृताहि ॥२९॥
रामक्रियाशक्तिरियंहि पंच,

प्राणान्समाविश्य करोति विश्वं ।
चिच्छक्तिरेषा तव पंच धैव,
भुंक्तेजगच्चाप्रिव पंच वक्का ॥३०॥
इच्छोभयत्राऽनुगतादृशास्या,
सृजत्यवत्यत्ति च शक्तिराद्या ।
अनंत शक्तेरिह विश्वमूर्त्ते,
स्तिस्रोद्दृशः शक्तिमतस्तवैव ॥३१॥
याभिर्महेश्वर सितासितलोहिताभिः,
स्वाभिः कलाभिरचल प्रभुरात्म तृप्तः ।
सत्वं प्रपंचयसिविश्वतयाविहर्तुं,
त्वामेकमेव विभुमव्ययमद्वितीयम् ॥३२॥
ताभ्यस्तिसृभ्य उदिताननु तावकीभ्यो,
गौरीन्दिरागिर इहेश्वर शक्तयोऽपि ।
तत्षोड़शांशविभवानि वसंति नित्यं,
रुद्रेषु विष्णुषु विधातृषु विश्वभूत्यै ॥३३॥
पूज्योहमंधक रिपुश्च तथा विरंचिस्त्व,
द्भावभावित तथैव जगत्सु नित्यम् ।

एतेपिकेचनजयंतिनिरस्तकामास्त्व-
द्भक्तिधौतमनसाभुवने वधूताः ॥३४॥
अपि स्वदेहादिषुनिः स्पृहाणामा-
काशलीनानिल चेष्टितानाम् ।
त्वमेव कल्याणकृतां मुनीना,
मालंवनंध्वस्तभवाटवीनाम् ॥३५॥
किंतन्महेश्वर विभोवहुधा विमृश्य,
तन्नासियत्सदपि वाप्यसदेववस्तु ।
ज्ञातुं तथाप्यपरिमेय न शक्यसेतै,
र्येषामनुग्रह दृशानपुनासि चेतः ॥३६॥
क्वचायं मानुषोभावः क्वचायमति लौकिकः ।
त्वन्मायामोहितानां नस्त्वमेव शरणं भव ॥३७॥
कोसिब्रूहि महेशान किं तवाद्य समीहितम् ।
अत्यद्भुतं ते वैश्वात्म्यं मुह्यामोयन्निरीक्षणात ॥३८
त्वमेव वेत्थ स्वां सम्यग्योसि सोसि महेश्वर ।
द्योत्यसेनैव मानैस्त्वं खद्योतैर्द्युमणिर्यथा ॥३९॥
अतोस्ति परमाणूनां मरुत्तेजोंवुभूमिषु ।

नांतोऽस्तित्वयि लीलानां ब्रह्मांडानामखंडिते ॥४०

लक्ष्यंते येन वहवो ब्राह्मणोऽति पराक्रमाः ।
विलक्षणाम्मिथश्चैते स्वरूपायुधवाहनैः ॥४१॥

केचिच्चतुर्मुखाः केचित्पंचवक्त्राश्च षण्मुखाः ।
दशवक्त्राशतास्याश्च सहस्र वदना अपि ॥४२॥

वहु वक्त्रा वहु भुजा वहु रूपास्तथा परे ।
विचित्र सृष्टि कुशला विचित्रायुध वाहनाः ॥४३

विचित्र शक्तयो भक्त्या त्वां नमंति महेश्वरम् ।
स्तुवन्ति बहुभिः स्तोत्रैरेकेध्यायंति निश्चलाः ॥४४

त्वत्प्राप्त्युपायमन्योन्यं वोधयन्त्य विमत्सराः ।
प्रपन्नाः सर्वभावेन त्वमेवशरणं परम् ॥४५॥

एवं बहुविधाकारं वाहनायुध विग्रहाः ।
विचित्र शक्तयोऽनंता हरयश्च कपर्दिनः ॥४६॥

त्वत्प्रभांशांश विभवास्त्वां सदापर्युपासते ।
अनुगृह्णीथ भक्तान्नः प्रसादाद्विश्वतोमुखः ॥४७॥

श्रीशुक उवाच ।

इति तेनस्तुतो रामो विष्णुना प्रभविष्णुना ।

प्रसन्नोत्फुल्लवदनैः प्रहसन्वाक्यमब्रवीत् ॥४८॥

श्रीराम उवाच।

अहमात्मा परोनित्यः सन्मात्रो विभुरीश्वरः।
सदसद्भाव रहितो भेदाभेद विवर्जितः ॥४६॥
एकोऽद्वितीयोविकृतो निराकारो निरंजनः।
मच्छक्तया विश्वमिदं भिन्नाभिन्नतयाऽस्थितम् ॥५०
यत्रत्वमन्ये वहवस्तत्त्वानामधिपाः सुरा।
मदंशांसावलं वेनखे खद्योता इवासते ॥५१॥
अहमेवादिरानंदो निरालंबः स्वराड्विभुः।
सर्वः सर्वगतः शांतः शुद्धश्चैतन्य विग्रहः ॥५२॥
आकाशस्यास्मि चाकाशोदिग्दिशामस्मिशाश्वती।
कालस्यापिमहान्कालोज्योतिषांज्योतिरुत्तमम् ॥५३
कारणं कारणानां च करणानामहं मनः।
अणूनां परमाणीयान्महतां च महत्तरः ॥५४॥
विभुर्विभूनामधिकस्तत्त्वानां तत्त्वमुत्तमम्।
योगो निर्वाणमार्गाणामहमस्मि सनातनः ॥५५॥
प्राणः प्राणभृतामस्मिदमश्चास्मि तपस्विनाम्।

शांतिरस्मिमुमुक्षूणां प्रणवोऽस्मिगिरामहम् ॥५६॥
विधिः क्रियावतामस्मि निवृत्तिरपि योगिनाम् ।
दीक्षितानां रतिश्चास्मिविरतिश्च विवेकिनाम् ॥५७
महोपनिषदं विष्णो संगृह्य कथंयामित्ते ॥
समनांसंसरिष्णुनामुन्मनास्मि मदर्थिनाम् ॥५८
यत्किंचित्परमं लोके तत्तदस्मि जनार्दनः ।
मयाव्याप्तिमिदं विष्णो विश्वमव्यक्त तेजसा ॥५९

श्रीशुक उवाच ।

इति ब्रुवन्नचिंत्यात्मा सर्वेषामेव पश्यताम् ।
विसृज्य मानुषं भावं वैश्वात्म्यं जगृहे तथा ॥६०॥
तथा विसृष्ट वैश्वात्म्यं स्वानं देनाति वृंहितः ।
परमाकाशतामेत्य रामोल्लक्ष्यतमब्रवीत् ॥६१॥

श्रीराम उवाच ।

अदृष्टमूर्त्तेरभवद्गिरसो मर्त्तोरमेशध्वनिरंवरादिः ।
मदिच्छयैवाखिल वाक् प्रपंचस्ततः,
परस्मादुदभूदुदर्कः ॥६२॥
लीने च यस्मिन्स्वयमद्वितीयः,

स्फुरामि साक्षादहमेक एव ।
योगोत्थितेनाप्यमृतत्वमेषां,
भवेद्यतीनामिह एव येन ॥६३॥
इतोष्टमायात्म भुवे विधातुः,
पुरस्वतोताय कृशानु शीर्ष्णो ।
मयोपदिष्टं गगनादिसृष्टेः,
प्रागेव कालोत्तर माद्यतंत्रम् ॥६४॥
तदेवदिग् विश्वसृजाममीषां,
तत्वत्रयात्मा विवृतं यथावत् ।
यत्रैव दृष्टाः सकलाश्च वेदा,
यैरात्मभूर्विश्वमयं व्यधत्त ॥६५॥
व्योम्नीवतारागि यदक्षराणि,
स्फुरंति चात्रैव मदंतराले ।
मच्छक्तयस्त्वत्प्रमुखा मुरारे,
यैर्व्यक्तिमायांतिसुराः समस्ताः ॥६६॥
येभ्यः समुद्धृत्य मयोपदिष्ट,
मुपास्यते तारकमंत्रराजम् ।

सृक्षंत्यनेनैव जगंतिरुद्रा:,
सिद्धाश्च साध्या ऋषयश्च भूयः ॥६७॥
अनेन मंत्रेण च बालखिल्या,
वैखानसामदृगतचेत सोत्र ।
सृष्टैव सम्यकसु विधूतमाया,
मामेव चेष्यंत्यपि चक्रपाणे ॥६८॥
प्राणांस्त्यजंतो मणिकर्णिकायां,
यद्वाचकं तारक मुच्चरंतः ।
श्रुवा च वेदान्त मुपास्य वाच्यं,
पश्यन्ति मामेवहि विश्वनाथम् ॥६९॥
प्राप्यै न माराध्य च मामनेन,
हिरण्यगर्भा मुनयोपि सप्त ।
ज्ञानं च मन्निष्टमुपेत्य सम्यक्,
दिवि प्रथंते मदनुग्रहेण ॥७०॥
अयं च मैत्रावरुणिर्विधातु,
रस्मात्तृतीयो भविता स्वयं भूः ।
व्यासश्च विष्णुर्भविता चतुर्थः,

स्कंदोमृडोस्मादपि शूल पाणे ॥७१॥
मत्प्राप्त्यु पायप्रथनार्थ मेव,
ब्रह्माण एते वहवो नियुक्ताः ।
यूयं च मद्वैभव वोधनार्थे,
रुद्रामदाच्छादन हेतवे च ॥७२॥
वेदेष्वमी विश्वसृजः प्रधानाः,
यूयं च मुख्याः श्रुतिमस्तकेषु ।
सर्वेषु शास्त्रेषु तथा गमेषु,
रुद्रा अमीमुख्यतमा भवंति ॥७३॥
ममैकांशे जगत्यस्मिन्प्रातिगोलमवस्थिता ।
तत्तद्गुणाधिपतयो ब्रह्म विष्णु कपर्द्दिनः ॥७४॥
तत्रांडकोशेचैतस्मिन्मुक्तकोशो यमात्मभूः ।
विष्णुः पालयिता चास्य त्वमंडस्यामृतेश्वरः ॥७५
रुद्रोप्यसावहिर्वुध्न्यः संहरिष्याति तत्पुनः ।
अस्य विश्वसृजः सर्गे भुवनानि चतुर्दश ॥७६॥
भूमाविहत्वदंशो सावभूद्दशरथो नृपः ।
यत्रावतीर्णमां सर्वे वदंत्यजमपि प्रभुम् ॥७७॥

आदौ गुणानामधिपैर्भवद्भिरमरेश्वरैः ।
मयैवसृष्टैः क्रीडार्थं सृष्टिस्थित्यंत कारणैः ॥७८॥
स्वेषु स्वेष्विह कल्पेषु तपस्तप्तं सुदारुणम् ।
अमूर्त्तेरपि मे नित्यं रूपस्यास्य दिदृक्षया ॥७९॥
साकं भवद्भिर्गंधर्वो विश्वावसुरपि स्वयम् ।
सहस्र सत्रैरिष्ट्वा मांसाम्नसारवा सहस्रवित् ॥८०॥
मामेवतोषयामास गायं गायं च सामभिः ।
निरूपमपिमां द्रष्टुं महामाया विमोहितः ॥८१॥
मर्त्यरूपमनेनापि वृत्तं तत्त्वमजानता ।
निवृत्तधर्मानुत्सृज्य काम्य कर्म्माणि कुर्वता ॥८२॥
राक्षसत्वमपिप्राप्तममूर्त्ते मूर्त्तिमिच्छता ।
मद्भक्ति लब्ध योगेन प्राप्स्यते च मदात्मताम् ॥८३
प्राप्तं चानेन निधनं मत्त एवान्य दुर्ल्लभम् ।
रावणोऽयं महाबाहुर्मनुत्वमुपयास्यति ।
पुनरिंद्रत्वमासाद्य भुक्त्वा भोगान्यथेप्सितान् ॥८४॥
गुरोस्तु वामदेवस्य नित्यं शुश्रूषणेरतः ।
कुशनाभ इतिख्यात ऋषित्वमुपयास्यति ॥८५॥

ऋषेरुदालकस्याथ पुत्रो योगविदांवरः ।
निवृत्ति धर्म्मैर्मा मिष्ट्वामत्सायुज्य मुपैष्यति ॥८६॥
मन्दरे गुरूणा शप्तः कणवः सोयं विभीषणः ।
क्रव्याद त्वमपिप्राप्यन् जहौधर्म मनुत्तमम् ॥८७॥
ऐंद्रं पदमनेनेह यावत्कल्प मभीरूणा ।
भोक्ष्यते मत्प्रसादेन मद्धाम प्राप्स्यते ततः ॥८८॥
यद्गोलेनैव भून्नापस्त्रीणि भूतानि सर्वदा ।
शीतोग्नि भीरूतस्ती ब्रोब्रह्माख्यस्य प्रजापतेः ॥८६
जायते जंतवो बन्हेः कामरूपा सुखोल्वणाः ।
व्योम गेहा वह्नि भुजो वायु भाजोमनोजवाः ॥६०
तत्रैक पादं योरूद्रो हनूमान्मत्परायणः ।
द्वात्रिंशदर्बुदान्येव रूद्राणां पर्यु पासते ॥६१॥
मद्भक्ति लब्धयोगस्तुमत्प्रसादाप्तवैभवः ।
आपदुद्धरणश्चायं भजतां नात्र संशयः ॥६२॥
संग्रहेण प्रवक्ष्यामि गुह्यमन्यत्तवाच्युत ।
येन विज्ञान मात्रेणछिद्यते संशयः स्वयम् ॥६३॥
येयं सीता महामाया शक्तिर्मे क्रीडतः सदा ।

भिन्नेव दृश्यतेऽभिन्नांजानीहि विश्वमेवताम् ॥६४
कार्य कारण रूपेण ययमेका विवर्त्तते ।
यस्य तत्त्वं न जानंति देवास्तत्प्रमुखा अपि ॥६५॥
अनुवाक श्रुतिभिः प्रोक्ता ययामुच्येत वंधनात् ।
एष मे प्रथमः पादः परमोपनिषत्ततः ॥६६॥
न यत्र शक्तिस्तत्वानि पराणि नैव किंचन ।
तदेव परमं व्योमभावाभाव विलक्षणम् ॥६७॥
मद्रूपमचलं नित्यं सत्यमाद्यंत वर्जितम् ।
तदेतदपिवैश्वात्म्यं हेयं स्याद्यदपेक्षया ॥६८॥
यत्र कुंठी भवंत्येव मानानि सकलान्यपि ।
परमं तद्धि निर्वाणं मदनुग्रहतो भवेत् ॥६९॥
मद्भाव भाविता यूयं मन्मयाश्च भविष्यथ ।
स्वस्वकर्माणि कुर्वंतो रमध्व मकुतोऽभयाः ॥१००

श्रीशुक उवाच ।

इति रामस्य वचः श्रुत्वासुराविष्णु पुरोगमाः ।
शिरस्यंजलिमाधाय प्रणिपत्य पुनः पुनः ॥१०१
जपंतो राम रामेति शब्द ब्रह्म परायणाः ।

स्मरंतस्तञ्च वैश्वात्म्यमनुसंदधिरेचतम् ॥१०२॥

स्तोत्रं पठेद्यो हरिणा प्रणीतं,
रामं विभुंतं प्रणिपत्य मूर्ध्ना ।
इन्द्रादि लक्ष्मी मनु भूयचांते,
पदं च विष्णोः परमं सगच्छेत् ॥१०३॥

भूरादि लोक भर्त्तारं भगवन्तमधोक्षजम् ।
उपेंद्ररूपिणं शश्वत्प्रपन्नोस्मि रघूत्तमम् ॥१०४

इति श्रीनिर्वाण खंडस्य स्कंद पुराणोपनिषद् द्वात्रिंशत्तमोऽध्यायः
श्रीमद्राम-गीता द्वितीयोऽध्यायः ।

---

* श्रीमतेरामानन्दायनमः *

श्रीशुक उवाच ।

ततस्त्यक्तोपसंहारं स्तोत्रैः शंभुमुखोद्गतैः ।
भूयः प्रसन्नं बदनं विष्णुगीतैरपिस्तवैः ॥१॥

परं भावंतिरोधाय सूक्ष्म भावे प्रतिष्ठितम् ।
रामं विश्वेश्वरं ब्रह्मा स्तोतुं समुपचक्रमे ॥२॥

ब्रह्मोवाच ।

नमः पुंसे पुराणाय षड्विंशाय महात्मने ।
उद्भवस्थिति संहार मूलवीजाय तेजसे ॥३॥

कार्य कारण कर्त्तृभ्यो विलक्षण पदायते ।
त्रिवेदी चक्षुषे तुभ्यं त्रिगुणातीत मूर्त्तये ॥४॥
तुभ्यं विश्वसृजे धात्रे ब्रह्मणः पतये नमः ।
विष्णवे विश्वभर्त्रे च विष्णूनां पतये नमः ॥५॥
रुद्राय विश्वसंहर्त्रे रुद्राणां पतये नमः ।
विश्वेदेवाय महते नमस्ते परमात्मने ॥६॥
स्वेच्छया पंचविंशाय कूटस्थायाऽविनाशिने ।
निस्तत्वाय नमस्तुभ्यंतत्वानां पतयेनमः ॥७॥
नियत्याक्रांतविश्वाय नियंत्रे नियतेरपि ।
निष्क्रियाय नमस्तुभ्यं विश्वकर्मैक साक्षिणे ॥८॥
प्राग्दशाहविषेतुभ्यं प्रत्यग्दृष्ट्या हविर्भुजे ।
तयोश्च साक्षिणे होत्रे नमस्त्रेधास्थितात्मने ॥९॥
क्रिया शक्ते र्ऋचोरूपं ज्ञानशक्तेर्यजूंषि च ।
सामानिचेच्छाशक्तेः स्तेप्यर्थवांगिरसोविभोः ॥१०
श्रीस्तेकाये सदेवास्ते मनसीच्छा सदा शिवा ।
वाणी साक्षाद्भगवती सदैवास्ते सरस्वती ॥११॥
विश्वमूर्त्तेरनंतानि वर्णानि तववैखरी ।

मध्यमामध्यमं चेतः पश्यन्ति यत्तवोत्तमम् ॥१२
आद्यंयदेतदव्यक्तं गुणाऽतीतं सदोदितम् ।
निर्वाणमक्षयं साक्षात्परात्म परमं पदम् ॥१३॥
न स्थानानि न चाकारो न रूपाणि न हेतवः ।
न बाहनानि कल्पानि निराकारस्यते विभो ॥१४॥
विश्वामरनराकारा भक्तानुग्रह हेतवे ।
क्रियंते भवता नाना धर्मसंस्थापनाय च ॥१५॥
कालः कलयते विश्वं तंत्वं कलयसि प्रभो ।
सत्वांकथयितुं नेष्टे रामत्वन्नेत्र संभवः ॥१६॥
नाहं स्रष्टा न च त्राता विष्णुर्नान्तकरो हरः ।
त्वदंशैरेव सकलं विद्यते निरपेक्षया ॥१७॥
ईक्षसे विश्वतश्चक्षुर्भुंक्षेस्त्वं विश्वतो मुखः ।
करोषि विश्वतो बाहुर्विश्वतश्चाथ गच्छसि ॥१८
पदो प्रतिष्ठिता मर्त्याः शीर्ष्णिदेवा व्यवस्थिताः ।
नाभेर्विनिस्त्रितावेदाः श्रोत्रैर्व्याप्तं चराचरम् ॥१९
वृषस्त्रिपाच्चतुः शृंगः सप्तहस्तोद्विमस्तकः ।
सदारवस्त्रिधाबद्धो महान् देवस्त्वमेवाहि ॥२०॥

त्वमेव यज्ञस्त्वं यष्टास्त्वं हविस्त्वंहि देवता ।
त्वमेव चर्त्विजो मन्त्रास्त्वं वैश्वानरयज्ञभुक् ॥२१
त्वं सर्पिस्त्वंवसंतस्त्वं ग्रीष्मोभूदिध्म एव च ।
शरदेवहविः पूतं सप्तास्यः परिधीयते ॥२२॥
तवास्येहूयते विश्वं त्वदास्यायत्वया प्रभो ।
त्वत्प्राप्तये सदानंद क्रतुरेषः सनातनः ॥२३॥
दुर्ल्लंघ्येयमिहास्माभिर्नियतिः पारमेश्वरी ।
त्वत्तीव्रशक्त्यातामेव मुक्तये मृगयामहे ॥२४॥
चतुर्भिर्वर्णैश्च पुनश्चतुर्भिः,
द्वाभ्यां च विप्राइह पंचभिश्च ।
हुत्वैवयज्ञाय पुनश्चतुर्भ्यः,
द्वाभ्यांहि साक्षादमृतीभवंति ॥२५॥
जाग्रद्विश्वं स्वप्नमेतद्धि तेजः,
प्राज्ञश्चायं याति सूक्ष्मां सुषुप्तिं ।
सूक्ष्मात्सूक्ष्मं धामयद्वातुरीयं,
ब्रह्माऽखंडं राम चैतत्त्वमेव ॥२६॥
येत्वां भजंति वपुषा मनसा च वाचा,

यस्यांशवोर्कहुतभुक्हिम रश्मयस्त्वैः,
राभासयंति भुवनानिकरैस्त्रयोऽपि ॥३१॥
विश्वाकृतिं हरि विरंचि शिवादि मूर्त्तिं,
तत्वाकृतिं तव निरंतर बोधसत्वम् ।
सम्यग्भजंति इहतत्समरूप लोकाः,
सान्निध्य भाजउप यांति च तन्मयास्ते ॥३२॥
एकत्वमेव सकलं करणानपेक्ष्यः,
साक्षात्करोषि युगपद्भगवंस्त्वऽलक्ष्यः ।
नैवास्ति तद्यदखिलैः करणैः क्रमेण,
साक्षात्करोति परमेश्वर कुत्रचित्त्वाम् ॥३३॥
येत्वामपास्ततमसो निजया विभूत्या,
सुव्याप्त विश्वमचलं परम द्वितीयम् ।
ध्यायंतिलीन पवनास्त्वयि लीन चित्ताः,
कालाशिनां यमभयं कुत एवतेषाम् ॥३४॥
क श्रीरियं परिमितासु कृतै रूपात्ता,
कात्स्न्ये स्थितेयमचला महती विभूतिः ।
रामत्वदुत्तमपदैकयुषां मुनीनां,

मिंद्रादिसंपदपि तुच्छ कपर्द्दिकैव ॥३५॥
स्तुमः कथंत्वामतिवाच मेते,
वेदादयोयच्छ्वसितं समस्ताः ।
विद्मः कथं त्वांमनसोऽतिभूमिं,
विश्वातिगं विश्वसदः सदैव ॥३६॥

श्रीशुक उवाच ।

इत्यादिभिः स्तुतिशतैः परितोष्यरामं,
वाचामगोचरतयैव हृदात्मनाथ ।
ध्यात्वैव तत्वमधिगम्य सपद्मयोनि,
रानंदमग्नमनसैव बभूव तूष्णीम् ॥३७॥
अथ प्रशांतमीशानं परमानन्द विग्रहम् ।
मुनयोवालखिल्याद्यास्तुष्टुवुर्हृष्ट मानसाः ॥३८॥

बालखिल्य उवाच ।

त्वत्तः परंनापरमस्ति किंचित्त्वत्तो,
नाणीयोन ज्यायोस्ति किंचित ।
स्वराट् सदैकोस्य चलोविभूः सन्ना,
काशमाकाशयसेनिर्गीर्ष्य ॥३९॥

न कर्मणा वा प्रजया धनैस्त्वं,
प्राप्योसि सर्वत्र सदात्मतृप्तः ।
लभ्योवधूतैश्च गुहांतरुच्चै,
रुद्‌गीथमुच्चार्य सदैकरुपः ॥४०॥
येतुत्वदर्था विहिताश्च धर्मा,
स्तान्नैव कुर्वन्तिविपश्चितोये ।
तेषाम धर्मेषु कुतो मतिस्या,
त्वद्भक्ति विघ्न प्रभवायतस्ते ॥४१॥
हिंसानृतस्तेय परिग्रहेभ्यो,
निवृत्तिरुच्चैर्विजितेंद्रियस्त्वम् ।
संतोष आस्तिक्यमखंड भक्ति-
स्त्वयि प्रसन्ने कृतिनांभवंति ॥४२॥
संसार भीत्यात्वदुपाश्रयत्वं,
भोगेषु दोषैक विलोचनं च ।
त्वदेक भावस्त्वयि सुप्रसन्ने,
त्वत्प्राप्त्युपाया यमिनां जयंति ॥४३॥
प्राणे परिस्पंदति तत्वराजे,

चित्तेऽनुधावत्यपि तन्निबद्धे ।
देहाद्यनात्म ग्रहतोऽभिमर्त्यो,
अहं कृतावीश कुतो विमुक्तिः ॥४४॥
हृताशयो व्योम्निलयः स्वसत्ता,
मात्रस्थितिर्नित्यमलोलुपत्वम् ।
गुरोरभेदो भवता स्व साम्यं,
सर्वेषु भूतेषु भवत् प्रसादात् ॥४५॥
लोष्टोपुमानिंद्रिय गोचरेषु,
भोगेषु तेषां विषतुल्यतां च ।
संपश्यतस्त्वत्कृपयैव जंतोः,
स्याच्चित्त नाशादिह एव मोक्षः ॥४६॥
त्वामेव वाह्यांतरखंडमेकं,
दृष्ट्वाहिसंको च ममी विलाप्य ।
पूर्णाश्चतेत्वामवलंब्य सिद्धाः,
सायुज्य साम्राज्य पदे रमंते ॥४७॥
निरंतरस्यो दरमंतरंते,
पश्यन् भयानां महतांपदंस्यात् ।

तुभ्यं परस्मै नम ईश्वराय ॥५२॥
नमः परस्मै हंसाय तुभ्यं शुचिषदेनमः ।
अंतरिक्षसदे तुभ्यंवसवे तिग्मतेजसे ॥५३॥
नमोहोत्रे पुराणाय तुभ्यं वर्हिषदे नमः।
नमोद्रोणसदेतस्मै तुभ्यंत्वतिथयेनमः ॥ ५४ ॥
नमोस्तु निषदे कर्त्रैतुभ्यं वरसदे नमः ।
नित्यंत्वत् सदेधात्रे नमो व्योम सदे सदा ॥५५॥
नमो मृताय सत्याय सवित्रे विश्व चक्षुषे ।
त्रिधाम्ने हेम वर्णाय नमस्ते विश्वरेतसे ॥५६॥
विष्णवे शिपिविष्टाय पशूनां पतये नमः ।
पुरोहिताय क्रतवे पुरुहूतायते नमः ॥५७॥
नमस्ते सामतनवे शब्द ब्रह्मैक मूर्त्तये ।
त्रिमूर्त्तये नमस्तुभ्यं परस्मै ब्रह्मणे नमः ॥५८॥
गरुत्मांस्त्वं सुपर्णोसि त्रैवृत्त शिर उच्यते ।
स्तोमस्तवात्मा यज्ञस्य गायत्रं चक्षुरुत्तमम् ॥५९॥
वृहद्रथंतरे पक्षौ वामदैव्यं वपुस्तव ।
छंदांस्यंगानि पुछं च यज्ञायज्ञीयमेवते ॥६०॥

बृहतस्तेसदाधिष्ट्यं तव नाम यजूंषि च ।
एवं ते तारकं रूपं वयं नित्यमुपास्महे ॥६१॥

श्रीशुक उवाच ।

इतिस्तुवंतस्ते भक्त्या तद्धामाविष्ट चेतसः ।
तत्रैव ब्रह्मणि परे समाधिं प्रतिपेदिरे ॥६२॥
ब्रह्मविष्णुशिवाचिन्त्यंज्ञात्वा श्रीराममीश्वरम् ।
इन्द्रोभक्तिमुपाश्रित्य स्तोतुं समुपचक्रमे ॥६३॥

इन्द्र उवाच ।

पाहीश नः करुणया परया भवाब्धेः,
कर्माटवीष्वनु दिनं परिवर्त्तमानात् ।
निस्तत्त्वनिः क्रिय निरंतरनिः प्रपंचम्,
स्वानंद राम सततं तव किंकराःस्म ॥६४
त्वामप्यगोचर मकृत्रिमभारतीनां,
ब्रह्माद्यचिंत्यमचलं प्रभुमद्वितीयम् ।
कोदंडशासन गुरुं परिषन्नराणां,
भूपालमेव वुवुधे रघुवंशदीपम् ॥६५॥
रुद्रंत्रिनेत्रमहिभूषणमिंदुमौलिं,

विष्णुं नवाम्बुदनिभंगरुड़ाधिरूढम् ।
ब्रह्माणमब्जनिलयं चतुराननं त्वा,
मस्वप्तसंसदियमीश्वर पश्यतीह ॥६६॥
तत्त्वाववोधनिपुणा परिषन्मुनीनां,
ब्रह्मैकमेवमनुते निगमांतगीतम् ।
विश्वं च सिद्ध निवहस्तदतीतमाद्यं,
योगींद्र संसदियमीश भवन्त मेव ॥६७॥
इत्थं परावरतया वहुरूपमेकं,
त्वामेव रामकवयो वहुधा गृणंति ।
विश्वैक नाटक विधायिनम प्रमेयं,
त्वामन्महे वहुतरं परमेश मेव ॥६८॥
कालस्यकालभवदक्षिनिमेष काले,
ब्रह्मादयः सुरवराः कतिनस्पुरेते ।
येषामहन्यह निवास्मचतुर्दशेंद्रां,
श्चास्मद्दिनं मनुजहायनमेक मुक्तम् ॥६९॥
एकोप्यजो विभुरहं बहुधा द्वितीयः,
स्यामीक्षथास्त्वमिति रामयदा कदाचित् ।

तिस्रस्तदासमभवन्परम क्रियेच्छा,
ज्ञानात्मिका निजरतेस्तव शक्तयोऽपि ॥७०
यासां कलाविलसितेषु दशास्य कीट,
कोटिः क्वचेंद्रमशका इतिनैव विद्मः ।
तासां तु मूल जननी निज शक्ति राधा,
सीता यदर्थमिहते किल युद्धलीला ॥७१॥
कस्तेकामः स्वात्मा रामस्य को वा,
क्रोधः साक्षाद्धिश्वमूर्त्तेस्त्वयीश ।
कोवा मोहः सच्चिदानंद भानो,
मोंहोमूलं कल्पनायं त्वयीत्थम् ॥७२॥
इच्छा मूलं कर्मणां भ्रांतिरद्धया,
मूढानां नो भ्रांति रद्धा सदैव ।
त्वद्भक्त्यैव ज्ञानमासाद्य सम्यग्-
भिद्यंत्येते भ्रांतिमूलं मुनींद्राः ॥७३॥
यत्रैव जीवन्ति निरस्तकामाः,
स्वात्मैक तृप्ताः परमावधूताः ।
तत्रम्रियन्ते पशवः सकामा,

वहिर्द्दशस्त्वद्विमुखामहेश ॥७४॥

गुणोल्वणानिश्वसितंहि वेदा-

स्तन्मौलयश्चोछ्वसितंगुणाद्याः।

अचिंत्य शक्तेस्तव लीलयोभौ,

स्यातां पशूनामिहबंध मोक्षौ ॥७५॥

मोहात्कामस्तद्विपाकक्रमोत्थः,

क्रोधोमोहश्चेति पाशैर्निवद्धम्।

चक्रावृत्त्यासंसरन्तं सदा मां,

पाशाँश्छित्वा मोचयेत्त्वामृतेकः ॥७६॥

स्वस्वाधिकारेषु गुणैर्निवन्ध,

भोगान्धनेत्राः पतिता भवाब्धौ।

त्वंतारक श्चेदित उत्पतन्त,

स्त्वय्येवलीये मुहि रामभद्र ॥७७॥

षड्विंशदावृत्य महाचिदास्मा-

स्तिष्ठन्ति तत्वानितवाज्ञयैव।

त्वत्तीव्रशक्त्या यदिभितिसतानि,

त्वत्तोऽस्तिनः कश्चिदणुर्नभेदः ॥७८॥

भोगेषु यास्यात्स्वत एव सेच्छा,
त्वय्येव मेस्यात् यदि कर्म वास्यात् ।
ज्ञानं च तेनैव भवत्प्रतिष्ठं,
त्वयि प्रसन्ने सकलं तदेतत् ॥७९॥
विज्ञप्तिमाकर्ण्य विधत्स्वभावा,
भवार्तिशान्ति मम दीनबन्धो ।
यत्ते पशूनाम्मिदमेव याचे,
भक्तिर्ममेयं त्वयि निश्चलास्तु ॥८०॥
भवत्प्रसादस्त्वयि भक्तितः स्यात्,
कायेन वाचामनसापि सापि ।
तत्कुर्महे तुभ्यमशेष भावैर्नमो,
नमस्याय परात्पराय ॥८१॥
नमः शब्दार्थनेत्राय तुभ्यं शब्दातिगाय च ।
नमो देवाधिदेवाय तुभ्यं विश्वैक योनये ॥८२॥
नमो वेदांतवेद्याय तुभ्यंवेदमुखाय च ।
त्रिशून्याय नमस्तुभ्यं निश्चलज्योतिषनमः ॥८३॥
सत्यानामपि सत्याय नमो विज्ञानमूर्त्तये ।

श्रीशुक उवाच ।

इत्थं यथामति विधायस्तुतिं तुराषाट्-

प्रोवाच चैनमभिषिच्य सुरद्रुपुष्पैः ।

रामत्वमेव शरणागत दुःकृताय,

दुष्टाटवीदवहुताशननामरूपः ॥६३॥

आहृत्य वाद्यनिकरान्सहलोकपालै,

रानर्त्तयन्प्रतिदिशं सुरयोषितश्च ।

रामोजयत्यखिल लोक कुलादि नाथो-

गायन्निति प्रतिपदं विरराम शक्रः ॥६४॥

इति भक्तिमतातेन संस्तुतः शतमन्युना ।

निरीक्ष्य सकलान्देवान् रामः प्रोवाचहर्षयन् ॥६५

श्रीराम उवाच ।

भोभोस्तत्वाधि पतयोमुनयश्च तपोधनाः ।

सिद्धाः साध्याश्चपितरोये चान्येगोलवर्त्तिनः ॥६६

मयैतद्विदितं सर्वं यदर्थं यूयमागताः ।

तत्तथैव विधास्यामि भयं वोऽव्यपगच्छतु ॥६७॥

भवद्भिर्यदिदं दृष्टं वैश्वात्म्यं मम शाश्वतम् ।

एकांश मात्रमेतद्धि ब्रह्माण्डानेक मंडितम् ॥९८॥
अत ऊर्ध्वमसंसक्तस्तत्वातीतो निरन्तरः ।
नित्य शुद्धो निरातंको मानातीतो निरंजनः ॥९९
निरंशोयः पराकाशो भावाऽभाव विलक्षणः ।
निस्तरंग सदानन्द सुधाब्धिरति निर्मलः ॥१००
निरालम्बो निराकारो विभुरेकः परः स्वराट् ।
सोऽहं भवद्भिरखिलैर्द्रष्टुंशक्यो न जातुचित् ॥१०१
भक्त्यैव दृढया सम्यक् नित्यमभ्यासिनः सुराः ।
ममैतत्परमं रूपं यूयं द्रक्ष्यथ* चापरे ॥१०२॥

श्रीशुक उवाच ।

इत्यौपनिषदं तत्वंस्तोत्रसूत्रैः प्रकाशितम् ।
स्मारंस्मारं च ते सर्वेक्षणंतन्मयतांययुः ॥१०३॥
ज्ञात ज्ञेयास्चते सिद्धाः शुचयोहंस विग्रहाः ।
जपन्ति मानसे तीर्थे ब्रह्मविद्या मिमांस्तुतिम् ॥१०४
अस्य स्तोत्रस्य माहात्म्यं मया वक्तुं न शक्यते ।
दातुं समीहितानर्थान् काम धुङ्नात्र संशयः ॥१०५

* इदानीं पश्यथ पुनर्द्रक्ष्यथा परे नराद्रक्ष्यन्तीत्यर्थः ।

ध्यात्वा तमीड्यं पुरुषंमहान्तं,

शामं वरण्यं त्रिदशैकनाथम् ।

स्तोत्रं तदेतच्चतुराननोक्तं,

पठन्प्रयात्यक्षय मेव धाम ॥१०६॥

स्तोत्र त्रयमिदं नित्यं पठतां शृण्वतामपि ।

जायते योग सम्पत्तिर्वैराग्यं भक्तिरीश्वरे ॥१०७॥

यदक्षरं पदभ्रष्टं मात्रा हीनं च यद्भवेत् ।

तत्सर्वं क्षम्यतां देवप्रसीद रघुनन्दन ॥ १०८॥

इति श्रीस्कन्द पुराणीयोपनिषत्सारभूतनिर्वाणखण्डस्थद्वात्रिंश-
त्तमोऽध्यायः समाप्तः समाप्ता चेयं श्रीमद्रामगीता
श्रीसीतारामचरणार्पणमस्तुः ।

---

## श्रीमद्वाल्मीकीये श्रीरामचन्द्र महास्तोत्रम् ।

### लोकपाला ऊचुः ।

कर्ता सर्वस्य लोकस्य श्रेष्ठो ज्ञान विदांविभुः ।
उपेक्षसे कथं सीतां पतन्तींहव्यवाहने ॥
कथंदेवगणश्रेष्ठमात्मानं नावबुद्धयसे ॥ १ ॥
ऋतधामा वसुः पूर्वं वसूनां च प्रजापतिः ।
त्रयाणामपि लोकानामादि कर्ता स्वयं प्रभुः ॥ २ ॥
रुद्राणामष्टमो रुद्रः साध्यानामपि पंचमः ।
अश्विनौ चापिकर्णौते सूर्याचंद्रमसौ दृशौ ॥ ३ ॥

अंते चादौ च मध्ये च दृश्यसे च परंतप ।
उपेक्षसे च वैदेहीं मानुषः प्राकृतो यथा ॥ ४ ॥
इत्युक्तो लोकपालैस्तु स्वामी लोकस्य राघवः ।
अब्रवीत्त्रिदशश्रेष्ठान्रामो धर्मभृतांवरः ॥ ५ ॥
आत्मानं मानुषं मन्ये रामं दशरथात्मजम् ।
सोऽहं यश्च यतश्चाहं भगवांस्तद् ब्रवीतु मे ॥ ६ ॥
इति ब्रुवाणं काकुत्स्थं ब्रह्मा ब्रह्मविदांवरः ।
अब्रवीच्छृणु मे वाक्यं सत्यं सत्यपराक्रम ॥ ७ ॥

## ब्रह्मोवाच ।

भवान्नारायणो देवः श्रीमांश्चक्रायुधः प्रभुः ।
एकशृंगो वराहस्त्वं भूतभव्यसपत्नजित् ॥ ८ ॥
अक्षरं ब्रह्म सत्यं च मध्ये चान्ते च राघवः ।
लोकानां त्वं परो धर्मो विष्वक्सेनश्चतुर्भुजः ॥ ९ ॥
शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः ।
अजितः खड्गधृग्विष्णुः कृष्णश्चैव बृहद्बलः ॥ १० ॥
सेनानी ग्रामणीः सर्वं त्वं बुद्धिस्त्वं क्षमादमः ।
प्रभवश्चाप्ययश्चत्व मुपेंद्रो मधुसूदनः ॥ ११ ॥
इन्द्रकर्मा महेन्द्रस्त्वं पद्मनाभो रणांतकृत् ।
शरण्यं शरणं चत्वामाहुर्दिव्या महर्षयः ॥ १२ ॥
सहस्रशृङ्गो वेदात्मा शतशीर्षो महर्षभः ।
त्वं त्रयाणांहि लोकानामादिकर्ता स्वयं प्रभुः ॥१३॥
सिद्धानामपि साध्यानामाश्रयश्चासि पूर्वजः ।
त्वं यज्ञस्त्वं वषट्कारस्त्वमोंकारः परात्परः ॥ १४ ॥
प्रभवं निधनं चापि नो विदुः को भवानिति ।
दृश्यसे सर्वभूतेषु गोषु च ब्राह्मणेषु च ॥ १५ ॥

दिक्षु सर्वासु गगने पर्वतेषु नदीषु च ।
सहस्रचरणः श्रीमान्शतशीर्षः सहस्रदृक् ॥ १६ ॥
त्वं धारयसि भूतानि पृथिवीं सर्वपर्वतान् ।
अन्ते पृथिव्याः सलिले दृश्यसे त्वं महोरगः ॥१७॥
त्रींल्लोकान्धारयन्राम देवगंधर्वदानवान् ।
अहं ते हृदयं राम जिह्वादेबी सरस्वती ॥ १८ ॥
देवा रोमाणि गात्रेषु ब्रह्मणा निर्मिताः प्रभो ।
निमेषस्तेस्मृता रात्रि रुन्मेषो दिवसस्तथा ॥ १९ ॥
संस्कारास्त्वभवन्वेदा नैतदस्तित्वयाविना ।
जगत्सर्बं शरीरंतेस्थैर्यं ते वसुधातलम् ॥ २० ॥
अग्निः कोपः प्रसादस्ते सोमः श्रीवत्सलक्षणः ।
त्वया लोकास्त्रयः क्रान्ताः पुरास्वै विंक्रमैस्त्रिभिः ॥२१॥
महेंद्रश्च कृतो राजा वलिं बद्ध्वासुदारुणम् ।
सीता लक्ष्मीर्भवान्विष्णुर्देवः कृष्णः प्रजापतिः ॥
वधार्थं रावणस्येह प्रविष्टो मानुषीं तनुम् ।
तदिदं नस्त्वया कार्यं कृतं धर्मभतांवर ॥ २३ ॥
निहतो रावणो राम प्रहृष्टो दिवमाक्रम ।
अमोघं देव वीर्यं ते न ते मोघाः पराक्रमाः ॥ २४ ॥
अमोघं दर्शनं राम अमोघस्तव संस्तवः ।
अमोघास्ते भविष्यन्ति भक्तिमंतो नरा भुवि ॥
ये त्वां देवं ध्रुवं भक्ताः पुराणं पुरुषोत्तमम् ।
प्राप्नुवंति तथाकामानिह लोके परत्र च ॥ २६ ॥
इममार्षस्तवं दिव्य मितिहासं पुरातनम् ।
ये नराः कीर्तयिष्यन्ति नास्ति तेषां पराभवः ॥



श्रीरामचन्द्रार्पणमस्तु ।